दयितजनेन वियोगं संयोगं खलजनेन जीवानाम्।
सुखदुःखं च समस्तं विधिरिव निरङ्कुशः कुरुते ॥ २७० ॥
अशुभोदये जनानां नश्यति बुद्धिर्न भिद्यते रक्षा।
सुहृदोऽपि सन्ति रिपवो विषमविषं जायते ऽमृतम् ॥ २७१ ॥
नश्यति हस्तार्थं पुण्यविहीनस्य देहिनो लोके।
दूरादेत्य करस्थं भाग्ययुतो जायते रत्नम् ॥ २७२ ॥
कस्यापि कोऽपि कुरुते न सुखं दुःखं च दैवमपहाय।
विदधाति यथा गर्व सकोऽहमहितस्य हन्तेति ॥ २७३ ॥
गिरिपतिरात्मसानुमधिरोहतु यातु सुरेन्द्रमन्दिरं
विशतु समुद्रवारि परभीतकमेकधिया प्रसर्पतु।
गगनतलं प्रयातु विदधातु युगुत्समनेकधायुधै
स्तदपि न पूर्वकर्म सवतं भव मुञ्चति देहधारिणाम् ॥ २७४ ॥
इति दैवनिरूपणम् ॥ १४

ताम्यत्यस्यति सर्पति विशति भाषति विकासति बिभाति।
यावन्नरो न जठरं देहसुखं जायते रिक्तम् ॥ २७५ ॥
यस्तत्करिष्यति बालो निःक्षिप्तद्रव्यनिर्गमद्वारम्।
को नाम सकया कर्तुं जठरघटीपूरणं मर्त्यः ॥ २७६ ॥
सप्तभेदापि सप्तभः पूरयितुं निम्नगासहस्रैः।
नो शक्यते कदाचिज्जठरसमुद्रोऽप्रसलिलेन ॥ २७७ ॥
वैश्वानरो न तृप्यति नानाविधकाष्ठनिचयतो यद्वत्।
तद्वज्जठरहुताशो नो तृप्यति सर्वभाण्याशनैः ॥ २७८ ॥
यत्रां वस्तु समस्तं न्यस्तं नाशाय कल्पते सततम्।
दुष्पूरोदरपिठरीं कस्तां शक्नोति पूरयितुम् ॥ २७९ ॥
तावन्नरः कुलीनो मानी शूरः प्रयात्यलेऽस्वधर्मम्।
यावज्जठरपिशाचो विसनोति न पीडनं देहे ॥ २८० ॥
यदि भवति जठरपिठरी नो माननिनाशिका शरीरभृताम्।
का कस्य तदा दीनं जल्पति मानापहारेण ॥ २८१ ॥

लक्ष्मीं प्राप्याप्यनर्घ्यामखिलपरजनप्रीतिपुष्टिप्रदात्रीं
कान्तां कान्ताङ्गयष्टिं विकसितवदनां चिन्तयस्यार्तचित्तः ।
लब्धा पुत्रं पवित्रं प्रथितपृथुगुणं तस्य भार्यां च लब्धा
पुत्रं तस्यापि कान्तामिति विहितमतिः खिद्यसे जीवमूढ ॥ १०४ ॥
जन्मक्षेत्रे पवित्रे क्षणरुचिचपले दोषसर्पोरुरन्ध्रे
देहे व्याधादिसिन्धुप्रपतनमलसे पापपानीयकुम्भे ।
कुर्वाणो न बुद्धिं विविधमलभृते यासि रे जीव नाशं
संचिन्त्यैवं शरीरे कुरु हत ममतां धर्मकर्माणि नित्यम् ॥ १०५ ॥
यद्वद्विच करोषि स्मरशरनिहतः कामिनीसङ्गसौख्ये
तद्वत्त्वं चेज्जिनेन्द्रप्रणिगदितमते मुक्तिमार्गे विदध्याः ।
किं किं सौख्यं न यासि प्रगतनवजरामृत्युदुःखप्रपञ्चं
संचिन्त्यैवं विधिस्त्वं स्थिरपरमधिया तत्र चित्त स्थिरत्वम् ॥ १०६ ॥
सद्यः पाताळमेति प्रविशति जलधिं गाहते देवगर्भं
भुङ्क्ते भोगानराज्ञामपरयुवतिभिः संगमं याचते च ।
वाञ्छत्यैश्वर्यमार्यं रिपुसमितिं हते कीर्तिकान्तां ततश्च
धृत्वा त्वं जीव चित्तं स्थिरमतिचपलं सत्सु कृत्यं कुरुष्व ॥ १०७ ॥
नो शक्यं यन्निषेद्धुं त्रिभुवनभवनप्राङ्गणे वर्तमानं
सर्वे नश्यन्ति दोषा भवभयजनका रोधतो यस्य पुंसाम् ।
जीवाजीवादितत्त्वप्रकटननिपुणे जैनवाक्ये निबद्ध्य
तत्त्वे चेतो विदध्याः शमसुखपदं त्वं तदा त्वं प्रयासि ॥ १०८ ॥
मित्रत्वं याति शत्रुः कथमपि सुकृतं नापहर्तुं समर्थो
जन्मन्येकत्र दुःखं जनयति भविनां शक्यते पापघातम् ।
नैवं मोहोऽस्य वैरी मृतजननजरादुःखतो जीव शश्वत्
यस्मात्तं निहत्य प्रशमशितशरैर्मुक्तिमार्गे भज त्वम् ॥ १०९ ॥
रे जीव त्वं विशुद्धं शमयमनियमज्ञानचारित्रपात्रेण
नेमिन्दुर्गं न नीतः किमिह भववनेऽत्यन्तरौद्रे हतात्मन् ।

अर्थः कामो धर्मो मोक्षः सर्वे भवन्ति पुरुषस्य ।
तावद्यावत्पीडां जाठरवह्निर्न विदधाति ॥ ३९५ ॥
एवं सर्वजनानां दुःसहकरं जठरविषममतिशिखिनम् ।
संतोषजलैरमलैः शमयन्ति यतीश्वरा ये ते ॥ ३९६ ॥
व्याधिस्थितेऽपि जठरहुतभुजि कृतचारित्रमोषितैर्नाहारो ।
कुर्वन्ति जठरपूर्णं मुनिवृषभा ये नमस्तेभ्यः ॥ ३९७ ॥
तावत्कुरुते पापं जाठरवह्निर्न शाम्यते यावत् ।
धृतिवारिणा शमित्वा तं यस्य पापतो विरता ॥ ३९८ ॥
श्रीमदमितगतिसौख्यं परमं परिहरति मानमपहन्ति ।
विरमति वृषतरुमनुमानुजठरदरीपूरणासक्तः ॥ ३९९ ॥
शमसंतोषवारिपरिषेचनकेन यतिः क्षुद्दुःसहं
शमयति च कृतान्तसमप्रेषितमुत्थितमौदरानलम् ।
भवति सरागशोकमदमत्सरदुःसहवियोगवर्जितं
विगलितमृत्युजननमपविघ्नमनघमनन्तमास्पदम् ॥ ४०० ॥

इति जठरनिरूपणम् ॥ १५ ॥

सर्पत्सान्द्रमदप्रमत्ततमभस्तोममस्तं समस्तं
सावित्रीव मरीचिभिर्नयति वितनुते पुण्यमन्यद्विनस्ति ।
सूते संमोहमैत्रीधृतिमृगतिमतिश्रीविभावान्तिकीर्तिं
किं किं वा नो विधत्ते जिनपतिपदयोर्भक्तिकर्त्री च दृष्टिः ॥ ४०१ ॥
शुश्रूषामाश्रयस्व गुणजनपदवीं याहि कोपं विमुञ्च,
ज्ञानाभ्यासं कुरुष्व, त्यज विषयरिपुं, धर्ममित्रं भजस्व ।
निर्विघ्नत्वं जहीहि व्यसनविमुखतामेहि, नीतिं विधेहि,
श्रेयश्चेदस्ति पूर्वं परमसुखमयं कर्तुमिच्छास्तवोरम् ॥ ४०२ ॥
तारुण्योद्रेकरम्यां दृढकठिनकुचां पद्मपत्रायताक्षीं
स्थूलोपस्थां परस्त्रीं किमिति शशिमुखीं वीक्ष्य सेवां ममासि ।
स्वमनसा सर्वोन्मादस्थं कुरु सुकृतमतो कान्तमर्त्येमनानां
वाञ्छा चेते हतात्मन् हि तव्यमभुने याम्पिकस्यापविरास्ति ॥ ४०३ ॥

ये बुध्यन्तेऽत्र तत्त्वं न प्रकृतिचपलं तेऽपि शक्ता निरोद्धुं
मोधत्कल्पान्तवाताक्षुभितजलनिधिस्फीतवीचिस्पदो वा ।
प्रागेवान्ये मनुष्यास्तरलतरमनोवृत्तयो दृष्टनष्टा
स्त्वमेवैतभ्रंदृगेतदस्थिरपरमसुखं त्वं तदा किं न यासि ॥ ४१७ ॥

रे पापिष्ठातिदुष्टव्यसनगतमते निन्द्यकर्मप्रसक्त
न्यायान्यायानभिज्ञ प्रतिहतकरुण व्यक्तसन्मार्गबुद्धे ।
किं किं दुःखं न यातो विनयवचनगतो येन जीवो विपद्य
स्त्वं तेनैनोऽतिवत्स्य प्रसभमिह मनो जैनतत्त्वं निषेहि ॥ ४१८ ॥

कृत्यादीनात्मशत्रो कुमतगतमते त्यक्ततत्त्वप्रणीते
सिद्धानुष्ठाननिष्ठस्थिरमदनरसे मुक्तिमार्गप्रवृत्ते ।
संसारं दुःखमुग्रं सुखरहितगताविन्द्रियैः भाषितो यैः
स्तेषामद्यापि जीव प्रवसि गततृष्ण व्यस्तबुद्धे वशित्वम् ॥ ४१९ ॥

सर्पव्याघ्रेभवैरिज्वलनविषमप्राहसंपुत्रहाधा-
न्हित्वा दुष्टस्वरूपान्दवति तनुभृतां ये व्यथा सर्वतोऽपि ।
शान्कोपादीषिकृष्टाननितविषमरिपूभिर्जय त्वं प्रवीणा
न्रे रे जीव प्रवीनमप्रशमगतिमते दत्त्वमलसघात्रो ॥ ४२० ॥

मैत्री सत्त्वेषु मोदं गुणवति करुणां क्लेशिते बहुमानि
मध्यस्थत्वं प्रतीपे विनयवचसि रतिं निग्रहं क्रोधवापे ।
अक्षार्थेभ्यो निवृत्तिं मृतिजननभयाद्भीतिमत्यन्तदुःखा
द्रे जीव त्वं विपत्त्वा च्युतनिखिलमले मोक्षसौख्येऽभिलाषम् ४२१

कर्माधीनो विधत्ते भवति परवशो लज्जते नो जनानां
धर्माधर्मो न वेत्ति त्यजति गुरुकुलं सेवते नीचलोकम् ।
मृत्वा प्राज्ञः कुलीनः प्रथितपृथुगुणो माननीयो बुधोऽपि
प्रस्तो येनात्र देहीनुदमदनरिपुं जीव तं दुःखदक्षम् ॥ ४२२ ॥

रागोद्युक्तोऽपि देवोत्तरतदितरश्रमन्यस्तफोऽपि साधुः
जीवध्वंसोऽपि धर्मस्तनुभिमबसुखं स्तात्प्रणु मे सर्ववेत्ति ।

तृष्णां चेच्चेन तेभ्यो विरमसि विमतेऽद्यापि पापास्रवेभ्यः
संसारात्स्यन्तदुःखात्क्षणमपि न तदा मुग्ध मुक्तिं प्रयासि ॥ ११०॥

मत्स्यीनेत्रलोलाद्विरमति च सुखाभोपिलासानन्तदुःखा-
त्प्राग्दोषेक्षातितिक्षामतिधृतिकरुणामित्रतामीप्सितांश्च ।
पर्ताढ्यास्यरम्या महि सरलदृशो मोहयित्वा तरुण्यो
दुःखात्पातुं समर्था नरकगतिमितामङ्गिनो जीव जातु ॥ १११॥

दृष्ट्वा लक्ष्मीं परेषां किमिति हतमते खेदमन्तः करोषि
नैषा नैते न च त्वं कतिपयदिवसैर्गत्वरं येन सर्वम् ।
सत्त्वं धर्मं विधेहि स्थिरविभवविधया जीव मुक्त्वान्यवाञ्छां
येन प्रध्वस्तबाधां विततसुखमयीं मुक्तिलक्ष्मीमुपैषि ॥ ११२॥

भोगा नश्यन्ति कालात्स्वयमपि न गुणो जायते तत्र कोऽपि
तज्जीवैवान्विमुञ्च व्यसनभयकरानात्मना धर्मबुध्या ।
स्वातन्त्र्यायेन याता विदधति मनसस्तापमत्यन्तमुग्रं
त्वन्त्यक्तेते तु मुक्ता स्वयमसमसुखं शाश्वतं नित्यमर्घ्यम् ॥११३॥

धर्मे चित्तं निधेहि, श्रुतकथितविधिं जीव भक्त्या विधेहि,
सम्यक्त्वान्तं पुनीहि, व्यसनकुसुमितं कामवृक्षं लुनीहि ।
पापे बुद्धिं धुनीहि, मदमयमदमाभिन्धि पिण्ढि प्रमादं,
छिन्धि क्रोधं, विभिन्धि प्रचुरमदगिरिं चेदस्ति चेन्मुक्तिवाञ्छा ११४

बाधा व्याधा च कीर्णे विपुलभववने भ्राम्यता संचितानि
दग्ध्वा कर्मेन्धनानि ज्वलितशिखिशिखैरत्यन्तदुःखप्रदानि ।
प्राप्ते नित्यसौख्यं व्यपगतविपदं जीव मोक्षं समीक्ष्य
बाह्यान्तर्भेदभुक्ते तपसि जिनमते तत्र तोषं कुरुष्व ॥ ११५॥

एको मे शाश्वतात्मा सुखमसुखभुजो ज्ञानदृष्टिस्वभावो
नान्यत्किंचिन्निजं मे तनुधनकरणभ्रातृभार्यासुतादि ।
कर्मोद्भूतं समस्तं चपलमसुखदं तत्र मोहो मुधा मे
पर्यालोच्येति जीव स्वहितमवितथं मुक्तिमार्गं श्रय त्वम् ॥ ११६॥

नीचोचादिविवेकनाशकुशलो मायाकरो देहिना-
माशाभोगनिरासनो मलिनताच्छन्नात्मना वल्लभः।
सद्दृष्टिप्रसराबरोधनपटुर्मित्रप्रतापाहत
कृत्याकृत्यविदा प्रदोषसदृशो वर्ज्यः सदा दुर्जनः ॥ १३० ॥
ध्वान्तव्यसपरः कलङ्कितनुर्वृद्धिक्षयोत्पादकः
पद्मद्वेषी कुमुदप्रकाशनिपुणो दोषाकरो यो जडः।
कामोद्रेगरसः समस्तमविना लोके निशानाथव
त्कस्तं नाम जनो महासुखकरं जानाति नो दुर्जनम् ॥ १३१ ॥
तुष्टो यो विदधाति दुःसमपरं परस्यसुखेनान्वित
दृष्ट्वा तस्य विभूतिमस्तधिषणो हेतुं विना कुप्यति।
वाक्यं जल्पति किंचिदाकुलमना दुःखावहं यच्छृणां
तस्माद्दुर्जनतो विशुद्धमनसः कारुण्यायवा बिभ्यति ॥ १३२ ॥
यस्त्यक्त्वा गुणसंहतिं वितनुते गृह्णाति दोषान्परे
दोषानेव करोति जातु न गुणं प्रेषालयं दुष्टधीः।
युक्तायुक्तविचारणाविरहितो विध्वस्तधर्मक्रियो
लोकानन्दिगुणोऽपि कोऽपि न खलं शक्नोति संबोधितुम् १३३
दोषेषु स्वयमेव दुष्टधिषणो यो वर्तमानः सदा
तत्रान्यानपि मन्यते स्थितिवतस्त्रैलोक्यवर्त्यङ्गिनाम्।
कृत्यं निन्दितमातनोति वचनं यो दुःश्रवं जल्पति
चापारोपितमार्गणादिव खलात्सन्तस्ततो बिभ्यति ॥ १३४ ॥
योऽन्येषां मषणोद्यतः प्रतिदिनं बुद्धिक्रियेक्षणः सर्वत्र
दम्भाद्यः परमाणुयन्मुरजवन्मृत्युयेनान्वितः।
नानारूपसमन्वितः शरदभ्रको भुजङ्गेश्वव
त्कस्मासौ न करोति दोषनिलयश्चित्तव्यथां दुर्जनः ॥ १३५ ॥
गाढं श्लिष्यति दूरतोऽपि कुरुतेऽभ्युत्थानमार्द्रेक्षणो
दत्तेऽर्धासनमातनोति मधुरं वाक्यं प्रसन्नाननः।

संसारापातहेतुं मतिगतिविदुरत कार्मते येन जीव
स्वं मोह मर्दय त्वं यदि सुखममुकं वाञ्छसि त्यक्तबाधम् ॥ ४२३ ॥
तीव्रत्रासप्रदायिमभवमृतिजराश्वापदभ्रातपाते
दु सोमीजमपक्षे भवगहनवनेऽनेकयोऽन्यद्विरौद्रे ।
भ्राम्यन मापि नृत्य कथमपि शमस कर्मणो दुष्कृतस्स
नो चेद्धर्मं करोपि स्थिरपरमधिया वञ्चितस्त्व सदात्मन् ॥ ४२४ ॥
ज्ञान तेऽयमबोधो जिनवचनरुचिर्देशनं पूततोय
चारित्रं पापमुक्तं प्रशमिवसुखिदं मुक्तिहेतुं प्रयत्न ।
मुक्त्वा संसारहेतुस्त्रितयमपि परं निन्द्यबोधाचवध
रे रे जीवात्मवैरिन्नमितगतिसुखे वेत्सेच्छासि पूते ॥ ४२५ ॥

इति जीवसंबोधननिरूपणम् ॥ ॥

पापं वर्धयते, चिनोति कुमतिं, कीर्त्यङ्गनां नश्यति,
धर्मं ध्वंसयति, तनोति विपदं, संपत्तिमुन्मर्दति, ।
नीतिं हन्ति, विनीतिमत्र कुरुते, कोपं धुनीते सम,
किंवा दुर्जनसंगतिर्न कुरुते लोकद्वयध्वंसिनी ॥ ४२६ ॥
न व्याघ्रः क्षुधयातुरोऽपि कुपितो, नाशीविष पन्नगो,
नारातिर्बलसत्त्वबुद्धिकलितो मत्त करीन्द्रो न च ।
तं दूषयति न कर्तुमत्र नृपति कण्ठीरवो मोद्धुरो
दोषं दुर्जनसङ्गतिर्वितनुते यं देहिनां निन्दिता ॥ ४२७ ॥
व्यापत्व्यालभुजङ्गसंगमयकरकक्षं वरं सेवितं
कल्पान्तोद्धतभीमवीचिनिचितो वार्धिर्वरं गाहितः ।
विश्वप्लोषकरोद्धतोग्रज्वलितो वह्निर्वरं प्राशितं
त्रैलोक्योदरवर्तिशापमनकेनासाधुमध्ये स्थितम् ॥ ४२८ ॥
वाक्यं जल्पति कोमलं सुखकरं कार्यं करोत्यन्यथा
वक्रत्वं न जहाति जातु मनसा सर्पो यथा दुष्टधीः ।
नो भूतिं सहते परस्य न गुणं जानाति कोपाकुलो
यस्तं साधुविनिन्दितं सखलनं का सत्तमः सेवते ॥ ४२९ ॥

नीत्योभ्यादिविवेकनाशकुशलो बाधाकरो देहिना-
 मायामोहनिरासनो मलिनताच्छन्नाशमनां खलम ।
सद्दृष्टिप्रसरावरोधनपटुर्मित्रप्रतापापहृत
 कृत्याकृत्यविदा प्रदोषसदृशो वर्ज्य सदा दुर्जन ॥ ४३० ॥
ध्वान्तध्वंसपर कलङ्कितसनुर्वृद्धिक्षयोत्पादक
 पद्माशी कुमुदप्रकाशनिपुणो दोषाकरो यो जड ।
कामोद्दीपकरस समस्तसुखिनो लोके निशानाथव
 त्क्रुद्ध नाम जनो महासुखकर जानाति नो दुर्जनम् ॥ ४३१ ॥
दुष्टो यो विदधाति दु खमपर पश्यत्सुखेनान्वित
 दृष्ट्वा तस्य विभूतिमत्रपिपणो हेतु विना कुप्यति ।
वाक्य जल्पति किंचिदाकुलमना दु सावह यत्कृपा
 तस्माद्दुर्जनतो विशुद्धमतय कारुण्यापया बिभ्यति ॥ ४३२ ॥
यस्त्यक्त्वा गुणसहति वितनुते गृह्णाति दोषान्परे
 दोषानेव करोति जातु न गुण प्रेप्सावश दुष्टधी ।
युक्तायुक्तविचारणाविरहितो विध्वस्तधर्मक्रियो
 लोकानन्दिगुणोऽपि कोऽपि न खलु शक्नोति सबोधितुम् ४३३
दोषेषु स्वयमेव दुष्टधिषणो यो वर्तमान सदा
 तत्रान्यानपि मन्यते स्थितिवतस्त्रैलोक्यवर्त्यङ्गिनाम् ।
कृत्य निन्दितमातनोति वचन यो दु श्रव जल्पति
 पापारोपितमार्गणादिव समस्तसन्तस्ततो बिभ्यति ॥ ४३४ ॥
योऽन्येषां मपघोपम स्वच्छिद्रमच्छिद्रेक्षण सर्षप
 दमात्र परमाणुम सुरपवद्वृक्षद्रुमेनान्वित ।
नानारूपसमन्वित सुरवत्रूको मुखश्लेषम-
 स्वच्मासौ न करोति दोषनिखयञ्चित्तम्यतां दुर्जन ॥ ४३५ ॥
गाढ क्षिप्यति दूरतोऽपि कुरुतेऽभ्युत्थानमार्द्रेक्षणो
 दत्तेऽर्धासनमातनोति मधुर वाक्य प्रसन्नानन ।

सत्या (?) यो निरुज वदन्ति यमिनो दम्भं शुचेर्धूर्तता
   स्वाङ्गाकोर्यदृतां पटोर्मुखरतां तेजस्विनो गर्वताम् ।
शान्तस्याक्षमतामृषोरमतितां धर्मार्थिनो मूर्खता-
   मित्येव गुणिनां गुणाखिलभुवने नादूषिता दुर्जनै: ॥ ११३ ॥
मत्युत्थाति समेति नौति नमति प्रह्वयते सेवते
   भुङ्क्ते भोजयते धिनोति वचनैर्गृह्णाति दत्ते पुन: ।
अङ्गे श्लिष्यति संतनोति वदनं विस्फारितार्धेक्षणं
   चित्तारोपितवञ्चिमोऽनुकुरुते कृत्यं यदिष्टं खल: ॥ ११४ ॥
सर्वोद्वेगविचक्षणः प्रचुररन्ध्रमुखमध्याप्य विष
   माणापर्पपदोपदेशकुटिलस्वान्तो द्विजिह्वान्वित: ।
भीमभ्रान्तविलोचनोऽसमगति श्वभ्रस्यालयेव
   श्छिद्रान्वेषणतत्परो भुजगवद्वर्ज्यो बुधैर्दुर्जन ॥ ११५ ॥
धर्माधर्मविचारणाविरहिता: सन्मार्गविद्वेषिणो
   निन्दाचारविधौ समुद्यतधिय: स्वार्थैकनिष्ठापरा ।
दु:खोत्पादकवाक्यभाषणरता: सर्वाप्रशस्ताकरा
   दृष्ट्वा अपरिग्रहमतिसमा विद्वज्जनैर्दुर्जना ॥ ११६ ॥
मानं मार्दववत् कुर्वं प्रशमतो क्षेमं तु संतोषतो
   मायामार्जवतोऽशनीमथमतेर्जिह्वाजयान्मन्मथम् ।
ध्वान्तं भास्करतोऽनलं सलिलतो मत्तास्तमीरासनं
   नेतुं शान्तिमलं कुतोऽपि न खलु मर्त्यो निमित्ताद्भुवि ॥ ११७ ॥
वीक्ष्यात्मीयगुणैर्गुणालयजनैर्धर्पूयमानं जन
   राहुर्वा सितदीधितिं भुवनकैरानन्दयन्तं जगत् ।
नो नीच: सहते निमित्तरहितो न्यक्कारबद्धस्पृह
   किंचिन्मात्र तदगुत सज्जने येन दृकेव(?)स्थिति ॥ ११८ ॥
त्यक्त्वा मौक्तिकसंहति करटिनो गृह्णन्ति काका: पलं
   त्यक्त्वा चन्दनमाश्रयन्ति कुपितेभ्योऽस्थिसर्पं मक्षिका: ।

---

1 इत्यर्थे वा शब्द:.

चिन्तान्तर्गतपन्नगो विनयवान्मिथ्यावचिदुष्टधी-
र्यो दुःखामृतमर्मणा विषमयो मन्ये कृतो दुर्जनः ॥ ११६॥

यद्यन्दनसंभवोऽपि दहनो दाहात्मकः सर्वदा
संपन्नोऽपि समुद्रवारिणि यथा प्राणान्तको दुन्दुभिः।
दिव्याहारसमुद्भवोऽपि भवति व्याधिर्यथा बाधकः-
स्तद्वद्दुःसकरः खलस्तनुमतां जातः कुलेऽप्युत्तमे ॥ ११७॥

लब्ध्वा जन्म यतो यतः पृथुगुणा जीवन्ति यत्राश्रिता
ये तत्रापि वने वने फलवति क्षेप पुलिन्दा इव।
निर्विघ्ना वितरन्ति भूतमतयः शश्वत्खला पापिनः
स्ते मुञ्चन्ति कथं विचाररहिता जीवन्त्यमन्यं जनम् ॥ ११८॥

यत्साधुविततमप्यगोचरमतिश्चन्तो द्विजिह्वानन-
स्कृद्धो रक्तविलोचनाऽसितरतमो मुक्तत्वचाव्याविषम्।
रौद्रो दृष्टिविषो विभीषितजना रन्ध्रावलोकोदित-
स्तं दुर्जनपन्नगं कुटिलगं शक्नोति कर्तुं वशम् ॥ ११९॥

नो निर्धूतविषं पिबन्नपि पयः सर्पस्ते पन्नगो
निम्बाः कटुतां पयोमधुघटैः सिक्तोऽपि नो मुञ्चति।
गोक्षीरैरपि सर्वदा विकसितं धान्यं यथात्यूषरं
नैवं मुञ्चति वक्रतां खलजनः संसेवितोऽप्युत्तमैः ॥ १२०॥

वैरं यः कुरुते निमित्तरहितो मिथ्यावचो भाषते
नीचोक्तं वचनं शृणोति सहते कौति सामन्यं जनम्।
नित्यं निन्दति गर्वितोऽभिभवति स्पर्धी सतोऽप्यूर्जिता
मेवं दुर्जनमत्युग्रविषमं सन्तो वदन्त्यहिनाम् ॥ १२१॥

भानौ शीतमतिग्मगोरहितता शुक्लस्वभावोऽमेधुत
पीयूष विषतोऽमृताद्विषभयता शुक्लत्वमङ्गारतः।
वह्नेर्वारि ततोऽनिलः सुरसर्वं निम्बाद्वेवात्यपि
नो मार्दवं महितं सतां हृदयमतेरुत्पद्यते दुर्जनात् ॥ १२२॥

नश्यत्पङ्को भुवनभवतोऽमूततत्त्वप्रदर्शी
सम्यग्मार्गप्रकटनपरो ध्वस्तदोषाकरश्री ।
पुण्यस्तपो गलितितिमिरो दत्तमित्रप्रतापो
राजत्येवा दिवससदृशः सज्जनो भाति लोके ॥ ४५६ ॥
ये कारुण्यं विदधति जने सापकारेऽनपेक्षा
मान्याचारा जगति विरला मण्डनं ते धरित्र्याः ।
ये कुर्वन्ति ध्रुवमुपकृतिं सत्कृत्यप्रसिद्धौ
सत्याः सन्ति मतिगृहममी काश्यपीभारभूताः ॥ ४५७ ॥
सम्यग्धर्मेष्वध्यवसितपरः पापविध्वंसदक्षो
मित्रामित्रस्थिरसममना सौख्यदुःखैकवेत्ता ।
ज्ञानाभ्यासारमशमितमदक्रोधलोभप्रपञ्चः
सद्वृत्ताढ्यो मुनिरिव जनः सज्जनो राजतेऽत्र ॥ ४५८ ॥
यः मोपुन्नः परमगरिमास्तैर्यवान्वा नगेन्द्र
पद्मानन्दी विहितजडिमा भानुवद्भूतदोषः ।
शीतः सोमोऽमृतमयवपुश्चन्द्रवद्ध्वान्तघाती
पूज्याचारो जगति सुजनो भात्यसौ ख्यातकीर्तिः ॥ ४५९ ॥
तृष्णां चित्ते शमयति मदं ज्ञानमाविष्करोति
नीतिं सूते हरति विपदः संपदः संचिनोति ।
पुंसां लोकद्वितयशुभदा संगतिः सज्जनानां
किं वा कुर्यान्न फलममलं दुःखनिर्नाशदक्षा ॥ ४६० ॥
चित्ताह्लादिव्यसनविमुखः शोकतापापनोदि
प्रज्ञोत्पादि श्रवणसुभगं न्यायमार्गानुयायि ।
तथ्यं पथ्यं व्यपगतमलं सार्थकं मुक्तबाधं
यो निर्दोषं रचयति वचस्तं बुधाः सन्तमाहुः ॥ ४६१ ॥
कोपो विद्युत्स्फुरिततरलो ग्रावरेखेव मैत्री
मेरुस्थैर्यं चरितममलं सज्जनस्योपचारः ।

हित्वार्थं विविध मनोहररसं श्वानो मल भुञ्जते
  मद्बुद्धासि गुण विहाय सततं दोषं तथा दुर्जना ॥ ४४९ ॥

इति दुर्जननिरूपणम् ॥ ११ ॥

ये जल्पन्ति व्यसनविमुखां भारतीमस्तदोषां
  ये श्रीनीतिद्युतिमतिधृतिप्रीतिशान्तीर्दधन्ते ।
येभ्यः कीर्तिर्विगलितमला जायते सन्मनाम्नां
  ह्यभ्यसन्तः कलिमलहृतये ते नरेणात्र सेव्याः ॥ ४५० ॥
नैतच्छ्यामा चकितहरिणीलोचना कीरनासा
  मुग्धालापा कमलवदना पक्वबिम्बाधरोष्ठी ।
मध्ये क्षामा विपुलजघना कामिनी कान्तरूपा
  यन्निर्दोषं वितरति सुखं सङ्गतिः सज्जनानाम् ॥ ४५१ ॥
यो नाक्षिप्य प्रवदति कथां नाभ्यसूयां विधत्ते
  न स्तौति स्वं हसति न परं वक्ति नान्यस्य मर्म ।
हन्ति क्रोधं स्थिरयति शमं प्रीतितो न व्ययीनि
  सन्तः सन्तो व्यपगतमदं तं सदा वर्णयन्ति ॥ ४५२ ॥
धृत्वा धृत्वा ददति तरवः सप्रणामं फलानि
  प्राप्य प्राप्तं भुवनमृजवे वारि धाराः क्षिपन्ति ।
दत्त्वा दत्त्वा वितरति हरिर्वन्दिन सन्निधेभ्यो
  नो साधूनां भवति भवने कोऽप्यपूर्वोऽत्र पन्थाः ॥ ४५३ ॥
पार्वेचन्द्र किमिह कुरुते नाकिमार्गस्थितोऽपि
  वृद्धौ वृद्धिं भजति भवतः तस्य हानौ च हानिम् ।
अज्ञातो वा भवति महतः कोऽप्यपूर्वस्वभावो
  देहेनापि प्रभवति तनुतां येन यद्बन्धुदुःखम् ॥ ४५४ ॥
सत्यां वार्तां भवति कुरुते नात्मशंसान्यनिन्दे
  नो मात्सर्यं भजति तनुते नापकारं परेषाम् ।
नो सक्तोऽपि व्रजति विकृतिं नैति मन्युं कदाचि-
  ल्लोकाप्येतदिगदितमहो चेष्टितं सज्जनस्य ॥ ४५५ ॥

बुद्धिर्धर्मग्रहणचतुरा वाक्यमक्षोपपातं
   किं पर्याप्तं न सुमनगुणैरेभिरेवात्र लोके ॥ १६२ ॥

यातु स्थैर्याच्चिचलति गिरिः शीततां याति वह्नि-
   र्मार्तण्डो नाथ स्थितिविरहितो मारुत स्तम्भमेति ।
शीतभानुर्भवति दिनपो जायते चामलाप
   कल्पान्तेऽपि व्रजति विकृतिं सज्जनो न स्वभावात् ॥ १६३ ॥

वृत्तत्यागं विदधति न ये नान्यदोषं वदन्ते
   नो याचन्ते सुहृदमधनं नाश्रयो नापि दीनम् ।
नो सेवन्ते विगतचरितं कुर्वते नाभिमूर्तं
   नो कुर्वन्ते कलहमलिनं सज्जनास्ते भवन्ति ॥ १६४ ॥

मातृस्वामिस्वजनजनकभ्रातृभार्याङ्गनाद्या
   दृष्टा प्रकाशस्विह न कल सज्जना सद्वदन्ते ।
काप्यपूर्वा वचनरचना येन सा व्यक्तदोषा
   यां शृण्वन्त शमितकलुषा निर्वृतिं यान्ति सत्त्वा ॥ १६५ ॥

नित्यच्छायाफलभरनता भीतिसंतापितार्ता
   स्तिस्रो मेघास्तु प्रकृतिकृतो व्रतसत्त्वावकाशा ।
श्रमयुक्ता विपुलकुसुमश्रीमाविनो सज्जनीया
   मीतिं यान्त्या चिरतरधियो वृक्षवत्सर्भवन्ति ॥ १६६ ॥

त्यक्त्वा स्वार्थं सकृपहृदया कुर्वते ये परार्थं
   ये निर्मीला विमितकलुषा सन्यते धर्मबुद्धिम् ।
ये निर्गर्वा विदधति हितं गृह्णते नापवादं
   ते पुंनागा जगति विरला पुण्यवन्तो भवन्ति ॥ १६७ ॥

हन्ति ध्वान्तं हरयति रज सत्त्वमाविष्करोति
   प्रज्ञां सूते वितरति सुखं न्यायवृत्तिं तनोति ।
धर्मे बुद्धिं रचयतितरां पापबुद्धिं धुनीते
   पुंसां नो वा किमिह कुरुते संगतिः सज्जनानाम् ॥ १६८ ॥

यस्माद्देही स्वगति लभते नो विना भोजनेन
तस्माद्दानं स्फुरिह ददता ता समस्ता प्रशस्ता ॥ ४८१ ॥
दर्पोद्रेकव्यसनमदनक्रोधयुद्धप्रतापा-
पापारम्भक्षितिविहतभियां जायते भक्षिमित्थम् ।
यत्संगृह्य भवति विषयान्दुःखितं यस्तयं स्या
यद्दुःखार्तं भवति न तच्छ्राप्यतेऽत्र प्रदेयम् ॥ ४८२ ॥
साधू रत्नत्रितयनिरतो जायते निर्जिताक्षो
धर्मं दत्ते व्यपगतमलं सर्वकल्याणमूलम् ।
रागद्वेषप्रसृति भवनं यद्गृहीत्वा विधत्ते
तद्दातव्यं भवति विदुषा देयमिष्टं तदेव ॥ ४८३ ॥
धर्मध्यानव्रतसमितिसुसंयतश्चारु पात्रं
स्यात्पात्रमात्र सहननतः श्रावको मध्यमं तु ।
सम्यग्दृष्टिर्व्रतविरहितः श्रावकः स्याज्जघन्य-
मेव त्रेधा जिनपतिमते पात्रमाहुः श्रुतज्ञा ॥ ४८४ ॥
यो जीवानां जनकसदृशः सत्यवाग्दत्तभोजी
सप्रेमस्त्रीनयनविशिखाभिन्नचित्तः स्थिरात्मा ।
द्वेधा ग्रन्थादुपरममनाः सर्वथा निर्जिताक्षो
दातुं पात्रं व्रतपतिममुं वर्यमाहुर्जिनेन्द्राः ॥ ४८५ ॥
यद्वत्तोयं निपतति घनात्स्वैकरूपं रसेन
प्राप्याधारं सगुणमगुणं याति नानाविधत्वम् ।
तद्वद्दानं सफलमफलं प्राप्यमभ्येति मत्वा
देयं दानं सममममृतां संयतानां यतीनाम् ॥ ४८६ ॥
यद्वत्क्षीरं गलति सकलं छिद्रयुक्ते घटेऽम्भ-
स्तिक्तालाबूनिहितमहितं जायते दुग्धमधम् ।
आमामत्रे रचयति भिदां तस्य नाशं च याति
तद्वद्दत्तं विगततपसे केवलं ध्वंसमेति ॥ ४८७ ॥

कालेऽलस्य क्षुधमवहितो दित्समानो विभूत्य
नो भोक्तव्यं प्रथममतिथेर्यः सदा तिष्ठतीति ।
तस्यामात्रावपि गतमल पुण्यराशिं भयन्तं
त दातारं जिनपतिमते गुरुमाहुर्जिनेन्द्राः ॥ ४७५ ॥

सर्वाभीष्टा बुधजननुता धर्मकामार्थमोक्षाः
सत्सौख्यानां वितरणपरा दुःखविध्वंसदक्षाः ।
लब्धुं शक्या जगति नयतो जीवितस्य विनेव
तद्दानेन प्रथमसुभृतां किं न दत्तं सतोऽत्र ॥ ४७६ ॥

हत्याकृत्ये कलयति मतः कामकोपौ लुनीते
धर्मे श्रद्धां रचयति परां पापबुद्धिं धुनीते ।
भक्षार्थेभ्यो विरमति रतो हन्ति चित्तं पुनीते
तद्दत्तस्य भवति विदुषा खादनस्य प्रतिभ्यः ॥ ४७७ ॥

भार्याभ्रातृस्वजनतनयान्यमिमिर्थं त्यजन्ति
भयासत्त्वमतसमितयो यद्विना यान्ति नाशम् ।
क्षुद् येन क्षपितवपुषो भुञ्जते न स्वभक्त
तद्दातव्यं भवति विदुषा संयतायान्नशुद्धम् ॥ ४७८ ॥

सम्यग्विद्याशमदमतपोध्यानमौनव्रताद्यं
श्रेयोहेतुर्गतरुजि तनौ जायते येन सर्वम् ।
तस्माद्भूत्वा व्यथितवपुषां शीघ्ररोगापहारै-
स्तद्भार्थं वितरत जना प्रासुकान्यौषधानि ॥ ४७९ ॥

शास्त्रदानान्महदपि फलं नो विधातुं समर्थं
कल्याणर्द्धिप्रदमपरागोमदिव्याश्विधानम् ।
त्यक्त्वा यथाजिनमतकथाभेषजाहारदानं
भूत्वाप्यस्मै विपुलफलदं तोषमुक्तं विशुद्धम् ॥ ४८० ॥

नीतिप्रीतिश्रुतिमतिधृतिख्यातिसत्किर्तिकीर्ति-
श्रीतिश्रान्तिस्थितिरतिपतिख्यातिसत्कीर्तिगीतिः ।

यस्माद्देही जगति लभते नो विना भोजनेन
तस्माद्दानं स्फुरिह ददता ता समस्ता प्रशस्ता ॥ १८१ ॥

दर्पोद्रेकव्यसनमथनक्रोधयुद्धप्रमादा-
पापारम्भक्षितिविहतधियां जायते यन्निमित्तम् ।
यत्संगृह्य भ्रमति विषयान्दुःखितं यत्क्षयं स्या
यद्धु सार्धं प्रभवति न तच्छ्राप्यतेऽत्र प्रदेयम् ॥ १८२ ॥

साधू रत्नत्रितयनिरतो जायते निर्जिताक्षो
धर्मं धत्ते व्यपगतमलं सर्वकल्याणमूलम् ।
रागद्वेषप्रभृति भवनं यद्गृहीत्वा विधत्ते
तद्दातव्यं भवति विदुषा देयमिष्टं तदेव ॥ १८३ ॥

धर्मध्यानव्रतसमितिभृत्संयतश्चारु पात्रं
व्यावृत्तारम्भात् सदनगतः श्रावको मध्यमं तु ।
सम्यग्दृष्टिर्व्रतविरहितः श्रावकः स्याज्जघन्य-
मेवं त्रेधा जिनपतिमते पात्रमाहुर्मुनीशाः ॥ १८४ ॥

यो जीवानां जनकसदृशः सत्यवाग्दत्तभोजी
सप्रेमस्त्रीनयनविशिखाभिन्नचित्तः स्थिरात्मा ।
द्वेधा ग्रन्थादुपरतमनाः सर्वथा निर्जिताक्षो
दातुः पात्रं व्रतपतिममुं वर्यमाहुर्जिनेन्द्राः ॥ १८५ ॥

यद्वत्तोयं निपतति घनाद्येकरूपं रसेन
प्राप्याधारं सगुणमगुणं याति नानाविधत्वम् ।
तद्वद्दानं सफलमफलं प्राप्यमप्येति मत्वा
देयं दानं समयममृतां संयतानां यतीनाम् ॥ १८६ ॥

यद्वत्क्षिप्तं गलति सकलं छिद्रयुक्ते घटेऽम्भ-
स्त्रिकालाग्निनिहितमहितं जायते दुग्धमन्नम् ।
आमामत्रे रचयति स्थितं तस्य नाशं च याति
तद्वद्दत्तं विगततपसे केवलं ध्वंसमेति ॥ १८७ ॥

तस्मात्तस्य प्रकटनपटुम्पदमाप्नोति पूतं
सर्वज्ञानं विगलितमलं ज्ञानदानेन मर्त्यः ॥ ४९४ ॥

दाता भोक्ता प्रभुजनयुतः सर्वसत्त्वानुकम्पी
सत्सौभाग्यो मधुरवचनः कामरूपाभिरामी ।
धर्मासक्त्या बुधजनमतो सेवनीयाग्निरुग्मो
मर्त्यः प्राज्ञो व्यपगतमदो जायतेऽन्नस्य दानात् ॥ ४९५ ॥

रोगैर्वातप्रभृतिजनितैर्बद्धिभिर्भीम्भुमम
सर्वाङ्गीणव्यथनपटुभिर्बाध्यते नो स जन्य ।
आजन्मान्तं परमसुखितो जायते चौषधानां
दाता यो निर्मलकुलवपुः स्थानकान्तिप्रताप ॥ ४९६ ॥

दत्त्वा दानं जिनमतरुचिः कर्मनिर्णाशनाय
भुक्त्वा भोगांस्त्रिदशवसतौ दिव्यनारीसनाथ ।
मर्त्यावासे वरकुलवपुर्जैनधर्मं विधाय
हत्वा कर्म स्थिरतररिपुं मुक्तिसौख्यं प्रयाति ॥ ४९७ ॥

इति दाननिरूपणम् ॥ १९ ॥

भवति मद्यवशेन मनोभ्रमो भवति कर्म मनोभ्रमतो यतः ।
भवति कर्मवशेन च दुर्गतिं त्यजत मद्यमतस्त्रिविधेन भो ॥ ४९८ ॥

हसति नृत्यति गायति वल्गति भ्रमति धावति मूर्छति शोचते ।
पतति रोदिति जल्पति गद्गदं धमति धाम्यति मद्यमदातुरः ॥ ४९९ ॥

स्वसुतामननीरपि मानवो व्रजति सेवितुमस्तगतिर्यतः ।
स्वगुणलोकविनिन्दितमद्यतः किमपरं खलु कष्टतरं ततः ॥ ५०० ॥

गलति वक्त्रमपत्रनमीक्ष्यते सकलमन्यतया श्लथते तनुः ।
स्खलति पादयुगं पथि गच्छतः किमु न मद्यवशाच्च्यवते मनः ॥५०१॥

असुमृतां वधमाचरति क्षणाद्वदति वाक्यमसत्यमसूनृतम् ।
परकलत्रधनान्यपि वाञ्छति न कुरुते किमु मद्यमदाकुलः ॥ ५०२ ॥

व्यसनमेति जने परिभूयते गदमुपैति न सत्कृतिमश्नुते ।
भवति नीचजनं भजति क्षमं किमिह कष्टमियर्ति न मद्यपः ॥५०३॥

प्रियतमामिव पश्यति मातरं प्रियतमां जननीमिव मन्यते ।
मधुरमद्यविमोहितमानसस्तदिह नास्ति न यत्कुरुते जनः ॥ ५०४ ॥
अहह कर्मकरीयति भूपतिं नरपतीयति कर्मकरं नरः ।
जलनिधीयति कूपमपांनिधिं गतजलीयति मद्यमदाकुलः ॥ ५०५ ॥
निपतितो वदने धरणीतलं वमति सर्वजनेन विनिन्द्यते ।
श्वशिशुभिर्वदने परिचुम्बितो बत सुरासुरतस्य न मूत्र्यते ॥ ५०६ ॥
भवति जन्तुगणो मदिरारसे तनुतनुर्विविधो रसकायिकः ।
पिबति मदिरारसलालसः भजति दुःखमसुखं ततो जनः ॥ ५०७ ॥
व्यसनमेति करोति धनक्षयं मदमुपैति न वेत्ति हिताहितम् ।
क्रममतीत्य तनोति विचेष्टितं भवति मद्यवशेन स कां क्रियाम् ॥ ५०८ ॥
रटति रुष्यति तुष्यति जल्पते पतति मुह्यति दीव्यति खिद्यते ।
नमति हन्ति जनं महिलां यथा यदपि किं च न जल्पति मद्यपः ॥ ५०९ ॥
व्रततपोयमसंयमनाशिनीं निखिलदोषकरीं मदिरां पिबन् ।
वदति धर्मवचो गतचेतनः किमु परं पुरुषस्य विडम्बनम् ॥ ५१० ॥
भवति पापमपाकुरुते वृषं त्यजति सद्गुणमन्यमुपार्जितं ।
भजति दुर्गतिमस्यति सद्गतिं किमथवा कुरुते न सुरारतः ॥ ५११ ॥
नरकसंगमनं कुलनाशनं भजति यः परिपीय सुधारसम् ।
स्व पिबाय सुखं परिपाच्य तं मधुरदुःखमयो सुखमत्र सः ॥ ५१२ ॥
पिबति यो मदिरामथ कोऽधमः भजति दुर्गतिदुःखमतो जनाः ।
इति विचिन्त्य महामतयस्सदा परिहरन्ति सदा मदिरारसम् ॥ ५१३ ॥
शमनयादिपरिजितपोऽर्जितं दहति वह्निरिवेन्धनमर्जितम् ।
मदिर मद्यमपाकृतधर्मैर्न परमवति ततो दुरितं महत् ॥ ५१४ ॥
स्खलति मौनमियर्ति विनिन्द्यतां भजति दोषमपाकुरुते गुणम् ।
भवति गात्रमपास्यति सद्गुणं हतमना मदिरारससेवितः ॥ ५१५ ॥
मधुरकोपकरीमिह वारुणीं पिबति यः परिगृह्य जनेन ताम् ।
मधुरं विषममसौ स्फुटं पिबति मूढमतिर्जननिन्दितम् ॥ ५१६ ॥

तदिह दूषणमखिलजनस्य नो विषमरश्मिसुतो भवणीयति ।
भवसुखं व्यसनभ्रमकारणं वितनुते मदिरा गुणिनिन्दिता ॥ ५१७ ॥
मतिधृतिद्युतिकीर्तिकृपाङ्गना परिहरन्ति रुषेव जनार्चितम् ।
नरमवेक्ष्य सुराङ्गनयाश्रितं न हि परां सहते वनिताङ्गनाम् ॥ ५१८ ॥
कलहमातनुते मदिरावशस्त्विह येन निरस्यति जीवितम् ।
वृषमपास्यति सञ्चिनुते मलं वनमपैति वने परिभूयते ॥ ५१९ ॥
स्वजनमन्यजनीयति मूढधी परजनं स्वजनीयति मद्यप ।
किमथवा बहुना कथितेन भो द्वितयलोकविनाशकरी सुरा ॥ ५२० ॥
भवति मद्यवशेन मनोभव सकलदोषकरोऽत्र शरीरिण ।
भवति तेन विकारमनेकधा गुणयुतेन सुरा परिवर्ज्यते ॥ ५२१ ॥
मधुरदोषकरी मदिरामिति द्वितयजन्मविनाशविचक्षणम् ।
निखिलतत्त्वविवेचकमानसा परिहरन्ति सदा गुणिनो जना ॥५२२॥

इति मद्यनिषेधनिरूपणम् ॥ २१ ॥

मांसाशनाज्जीववधानुमोदस्ततो भवेत्पापमनन्तमुग्रम् ।
ततो व्रजेद्दुर्गतिमुग्रदोषां मत्वेति मांसं परिवर्जनीयम् ॥ ५२३ ॥
तनूद्भवं मांसमवद्यमेध्यं कथं स्पृशेत् साधुजनमनिन्द्यम् ।
निर्विंशचित्तो विनिकृष्टगन्धं शुनीविशेषं लभते कथं न ॥ ५२४ ॥
मांसाशिनो नास्ति दयासुभाजां दयां विना नास्ति जनस्य पुण्यम् ।
पुण्यं विना याति दुरन्तदुःखं संसारकान्तारमलभ्यपारम् ॥ ५२५ ॥
पलाशिनो नास्ति जनस्य पापं यो भाषते मांसाशिजनमधुत्वम् ।
ततो वधासक्तमतोऽयमसाधिपापचारी नरकं प्रयाति ॥ ५२६ ॥
पट्टोटिशुद्धं पलमस्ततो नो दोषोऽस्ति ये नष्टधियो वदन्ति ।
नरादिमांसं प्रतिषिद्धमेते किं किं न योषाति विशुद्धिरत्र ॥ ५२७ ॥
लभाति यो मांसमसौ विधत्ते वधानुमोदं त्रसदेहभाजाम् ।
गृह्णाति रेपांसि ततस्तपस्वी तेभ्यो दुरन्तं भवमेति जन्तुः[1] ॥ ५२८ ॥

---

१ वारन.

मृगान्वराकांस्तृणतोऽपि तूर्णान्निरागसोऽत्यन्तविभीतचित्ता ।
येऽश्नन्ति मांसानि निहत्य पापास्तेभ्यो निकृष्टा अपरे न सन्ति ५४२
मांसान्यशित्वा विविधानि मर्त्यो यो निर्दयात्मा नरकं प्रयाति ।
निकृत्य शस्त्रेण परैर्निकृष्टैः प्रखाद्यते मांसमसौ स्वकीयम् ॥ ५४३ ॥
निषेव्य सत्त्वेष्वपदोषभावं येऽश्नन्ति पापाः पिशितानि गृध्राः ।
तैः कारितोऽस्तीव वधः समस्तस्तेभ्यो वधको नास्ति न हिंसको हि॥५४४॥
शास्त्रेषु येष्वस्ति वधः प्रणीतो वधोपदेशान्यपि यत्र न तानि ।
प्रमाणमिच्छन्ति विशुद्धसत्त्वाः संसारकान्तारविनिन्दनीयाः ॥ ५४५ ॥
मद्यं करोत्येकमसार्यमत्र मांसं समुद्भूतमनिष्टगम्यम् ।
यथाश्रुते मेध्यसमं न दोषं तर्हि श्वचण्डालमुखा न दुष्टाः ॥ ५४६ ॥
धर्मद्रुमस्यास्तमलस्य मूलं निर्मूलमुन्मूलितमप्रमादात् ।
शिवादिकल्याणफलप्रदस्य मांसाशिना स्यान्न कथं नरेण ॥ ५४७ ॥
दुःखानि यान्यत्र कुयोनिया(जा)नि भवन्ति सर्वाणि नरस्य तानि ।
पलाशनेनेति विचिन्त्य सन्तस्त्यजन्ति मांसं त्रिविधेन नित्यम् ॥५४८॥

इति मांसनिषेधनिरूपणम् ॥ २१ ॥

मधुसक्तः कृपा नास्ति पुण्यं नास्ति कृपां विना ।
विना पुण्यं नरो दुःखी पर्यटेद्भवसागरे ॥ ५४९ ॥
एकैकोऽसंख्यजीवानां घाततो मधुनः कणः ।
निष्पद्यते यतस्तेन मध्वसक्तिं कथं बुधः ॥ ५५० ॥
ग्रामाणां सप्तके दग्धे यदेनस्सर्वथा नृणाम् ।
पापं तदेव निर्दिष्टं भक्षिते मधुनः कणे ॥ ५५१ ॥
एकैकस्य यदादाय पुष्पस्य मधु संचितम् ।
किञ्चिन्मधुकरीवर्गैस्तदप्यश्नन्ति निर्घृणाः ॥ ५५२ ॥
अनेकजीवघातोत्थं म्लेच्छोच्छिष्टं मलाविलम् ।
मलभक्षपात्रं निषिद्धं किं शौचं लिहतो मधु ॥ ५५३ ॥

---

१ सितपदः

वरं हालाहलं पीतं सद्यः प्राणहरं विषम् ।
न पुनर्भक्षितं सम्यक् सद्य मधु देहिनाम् ॥ ५५४ ॥
दुःखानि यानि संसारे विद्यन्तेऽनेकभेदतः ।
सर्वाणि तानि लभ्यन्ते जीवेन मधुभक्षिणाम् ॥ ५५५ ॥
शमो दमो दया धर्मः संयमः शौचमार्जवम् ।
पुंसस्तस्य न विद्यन्ते यो लेढि मधुलालसः ॥ ५५६ ॥
औषधायापि यो मर्त्यो मध्वश्नाति विचेतनः ।
कुयोनौ जायते सोऽपि किं पुनस्तत्र लोलुपः ॥ ५५७ ॥
ममत्वेनापि यत्पीतं भवभ्रमणकारणम् ।
तदश्नाति कथं विद्वान्भीतचित्तो भवान्मधु ॥ ५५८ ॥
एकमप्यत्र यो बिन्दुं भक्षयेन्मधुनो नरः ।
सोऽपि दुःखझषाकीर्णे पतते भवसागरे ॥ ५५९ ॥
ददाति लाति यो भुङ्क्ते निर्दिशत्यनुमन्यते ।
गृह्णाति माक्षिकं पापं पञ्चैते समभागिनः ॥ ५६० ॥
एकत्रापि हते जन्तौ पापं भवति दारुणम् ।
न सूक्ष्मानेकजन्तूनां घातिनो मधुपस्य किम् ॥ ५६१ ॥
योऽश्नाति मधु निस्त्रिंशस्तज्जीवास्तेन मारिताः ।
येनास्ति तादृकः कश्चिद्घातकः साधवा कथम् ॥ ५६२ ॥
एकत्र मधुनो बिन्दौ भक्षितेऽसंख्यदेहिनः ।
यो हि न स्यात्कृपा तस्य तस्मान्मधु न भक्षयेत् ॥ ५६३ ॥
अनेकदोषदुष्टस्य मधुनोऽपास्तबोधताम् ।
यो ब्रूते स्वादमासक्तः सोऽसत्यो बुद्धिरस्तधीः ॥ ५६४ ॥
यथास्थेऽपि हते धर्मे लभन्ते व्यसनं जनाः ।
निःशेषं मधुकर्मीयं भुञ्जन्तो न कथं व्यधुः ॥ ५६५ ॥
मधुप्रयोगतो बुद्धिर्मदमस्य ततो जन ।
संचिनोति महत्पापं यास्यतो नरकावनिम् ॥ ५६६ ॥

दीनैर्मधुकरैर्वर्गे संचितं मधु कृच्छ्रतः ।
यः स्वीकरोति निस्त्रिंशः सोऽन्यस्त्यजति किं नरः ॥ ५६७ ॥
यत्राप्यैवं महादोषान्यो धत्ते मधुलम्पटः ।
संसारकूपतस्तस्य नोत्तारो जातु जायते ॥ ५६८ ॥
संसारभीरुभिः सद्भिर्भिनाज्ञां परिपालितुम् ।
यावज्जीवं परित्याज्यं सर्वथा मधु मानवैः ॥ ५६९ ॥
विज्ञायेति महादोषं मधुनो बुधसत्तमाः ।
संसारासारतस्त्रस्ता विमुञ्चन्ति मधु त्रिधा ॥ ५७० ॥

इति मधुनिषधनिरूपणम् ॥ २२ ॥

याति मनस्तनुवाविवनानां सन्ति जगत्यितर्येऽप्यसुखानि ।
कामपिशाचवशीकृतचेतास्तानि नरो लभते सकलानि ॥ ५७१ ॥
ध्यायति धावति कम्पमियर्ति भ्राम्यति ताम्यति नश्यति नित्यम् ।
रोदिति सीदति जल्पति दीनं गायति नृत्यति मूर्छति कामी ॥५७२॥
रुष्यति तुष्यति हासमुपैति कर्षति दीव्यति सीव्यति वसनम् ।
किं न करोत्यवशो हतबुद्धिः कामवशो पुरुषो जननिन्द्यम् ॥ ५७३ ॥
वेत्ति न धर्ममधर्ममियर्ति ध्यायति शोचति याति कुचलम् ।
नीचजनं भजते मदतीर्थ्यो मन्मथराजविमर्दितचित्तः ॥ ५७४ ॥
नैति रतिं गृहपत्तनमध्ये ग्रामवनस्वजनान्यजनेषु ।
वर्षसमं क्षणमेकमवैति पुष्पधनुर्धरतामुपयातः ॥ ५७५ ॥
सर्वजनेन विनिन्दितमूर्तिः सर्वविचारबहिर्भवबुद्धिः ।
सर्वजनमभितां निजकीर्तिं मुञ्चति कन्तुवशो गतकान्तिः ॥ ५७६ ॥
भोजनशीतिविहाररतानां सज्जनसाधुवतां श्रमणानाम् ।
भाममभामिव पात्रमपात्रं पश्यति समस्तमुखो मदनार्तः ॥ ५७७ ॥
धास्त्रगुणो विदितासिलशास्त्रः कर्म करोति कुलीनविनिन्द्यम् ।
मातृपितृस्वजनान्यजनानां नैति वशं मदनस्य वशो ना ॥ ५७८ ॥
तावदशेषविचारसमर्थस्तावदखण्डितमूर्जति मानम् ।
तावदपास्तमलो मननीयो यावदनङ्गवशी न मनुष्यः ॥ ५७९ ॥

शोचति विश्वममीष्टति द्रष्टुमायस्यति ज्वरमृच्छति दाहम् ।
मुञ्चति भक्तिमुपैति विमोहं माद्यति वेपति याति मृतिं च ॥ ५८० ॥
एवमपास्तमतिः क्रमतोऽत्र पुष्पधनुर्वशवेगविधूतः ।
किं न जनो लभते जननिन्द्यो दुःखमसह्यमनन्तमवाच्यम् ॥ ५८१ ॥
चिन्तनकीर्तनभाषणकेलिस्पर्शनदर्शनविभ्रमहासैः ।
अष्टविधं निगदन्ति मुनीन्द्राः काममपाकृतकामविबाधाः ॥ ५८२ ॥
सर्वजने कुरुते जनमान्य सर्वपदार्थविचारणदक्षः ।
मन्मथबाणविभिन्नशरीरः किं न नरः कुरुते जननिन्द्यम् ॥ ५८३ ॥
अह्नि रविर्दहति शुचिरूढः पुष्पधनुर्दहति मनसोरम् ।
रात्रिदिनं पुनरन्तरमन्त्र सदाधिरस्ति रवेर्न तु कन्तो ॥ ५८४ ॥
स्थावरजङ्गमभेदविभिन्नं जीवगणं विनिहन्ति समस्तम् ।
निष्करुणो कृतपापकचेष्टः काममदः पुरुषोऽतिनिकृष्टः ॥ ५८५ ॥
निष्ठुरमश्रवणीयमनिष्टं वाक्यमसत्यमवद्यमहृद्यम् ।
जल्पति काममदान्धमपूज्यं मधमदाकुलजन्मजनार्थे ॥ ५८६ ॥
स्वार्थपरः परदुःखमविचिन्त्याप्यसमानपरस्य धनानि ।
संघविदु सविधानमिदित्वा पापमनङ्गवशो हरतेऽङ्गी ॥ ५८७ ॥
यो परिनिन्द्य भवाम्बुदु समन्यफलक्रममीप्सति कामी ।
साधुजनेन विनिन्द्यमगम्यं तस्य किमत्र परं परिहार्यम् ॥ ५८८ ॥
तापकरं पुरुषातकमूलं दुःखशतार्थमनर्थनिमित्तम् ।
काति बुधः पुरुष कुसुमेषोर्भेदमनेकविधं बुधनिन्द्यम् ॥ ५८९ ॥
एवमनेकविधं विदधाति यो जननार्णवपातनिमित्तम् ।
चेष्टितमङ्गजवाणविभिन्नो नेह सुखी न परत्र सुखी सः ॥ ५९० ॥
इष्टिपवित्रतपोगुणविद्याशीलदयादमशौचशमादीन् ।
कामशिखी दहति क्षणतो दुर्निहितेरिवेन्धनमर्जितमत्र ॥ ५९१ ॥
किं बहुना कथितेन नरस्य कामवशस्य न किंचिदकृत्यम् ।
एवमवेत्य सदा मतिमन्तः कामरिपुं शमयन्ति नमन्ति ॥ ५९२ ॥

नारिरिमं विदधाति नराणां रौद्रमना नृपतिर्न करीन्द्रः ।
दोषमहिर्न न तीव्रविषं वा यं वितनोति मनोभववैरी ॥ ५९३ ॥
पञ्चमवे रिपुपन्नगदुःखं सन्मथवेपु मनोमवदुःखम् ।
चाल्पयियेति विचिन्त्य महान्तः कामरिपुं क्षणतः क्षपयन्ति ॥ ५९४ ॥
संयमधर्मविबद्धशरीराः साधुभटा स्मरवैरिणमुग्रम् ।
शीलतपःसितशस्त्रनिपातैर्दर्शनबोधबलाद्विधुनन्ति ॥ ५९५ ॥

इति कामनिषेधनिरूपणम् ॥ २१ ॥

शौचक्षमसंयमविद्याशीलदयागुणसत्कृतिकश्चा ।
क्षिपन्ति पुरुषस्य समस्तास्ता बुधः कथमिहेच्छति वेश्या ॥ ५९६ ॥
तु सक्तमनसः क्षयमेति द्रव्यमापदुपयाति समृद्धिम् ।
भवा भवति नश्यति कीर्तिस्ता भवन्ति गणिका किमु मान्या ॥५९७॥
अपि तनुते पुरु पापं या निरस्यति गुणं कुरुतेऽन्यम् ।
स्यमन्यति ददाति च दुःखं तां विगस्तु गणिकां बहुदोषाम् ॥ ५९८ ॥
मन च जघनं च मदीयं नित्यलोकमलदिग्धमवाच्यम् ।
पयोषितमनर्थनिमित्तां तां नरस्य भजतः किमु शौचम् ॥ ५९९ ॥
त्याति हृदयेऽन्यमनुष्यं मान्यमाह्वयति दृष्टिविशेषैः ।
न्यमर्थिनमतो भजते तां को बुधः भवति पण्यपुरंध्रीम् ॥ ६०० ॥
द्रूपमतिधृतिद्युतिकीर्तिप्रीतिकान्तिशमतापदुराशा ।
पिव परिहरन्ति रुपेव पण्ययोषिति निषक्तमनस्कान् ॥ ६०१ ॥
करोति बहुचाटुशतानि द्रव्यदातरि जनेऽप्यकुलीने ।
र्थेन त्यजति काममपि स्त्रीं तां विशुद्धधिषणा न भजन्ति ॥ ६०२ ॥
तमोऽपि कुलजोऽपि मनुष्यः सर्वलोकमहितोऽपि बुधोऽपि ।
सतां भवति यां भजमानस्तां भजन्ति गणिकां किमु सन्तः ॥ ६०३ ॥
। विचित्रविटकोटिनिघृष्टा मद्यमांसनिरतातिनिकृष्टा ।
मिष्ठां वचसि चेतसि दुष्टां तां भजन्ति गणिकां न विशिष्टाः ॥६०४ ॥
र्वसमहत्पराविनिपृष्टा सत्यशौचशमधर्मवहिष्टा ।
र्वदोषनिलयातिनिकृष्टा तां भयन्ति गणिकां किमु शिष्टाः ॥ ६०५ ॥

या कुलीनमकुलीनममान्यमन्यमाश्रितगुणं गुणहीनम् ।
वेत्ति नो कपटसङ्कटचेष्टां तां भजन्ति गणिकां किमु शिष्टाः ॥ ६०६

तावदेव दयितः कुलजोऽपि यावदर्पयति भूरिधनानि ।
येषुवस्त्यजति निर्गतसारं तत्र हो किमु सुखं गणिकायाम् ॥ ६०७ ॥

तावदेव पुरुषो जनमान्यस्तावदाश्रयति चारुगुणश्री ।
तावदामनति मर्मवचांसि यावदेति न वशं गणिकायाः ॥ ६०८ ॥

मन्यते न धनसौख्यविनाशं नाभ्युपैति गुरुसज्जनवाक्यम् ।
नेक्षते भवसमुद्रमपारं दारिकार्पितमना गतबुद्धिः ॥ ६०९ ॥

वारिराशिसिकतापरिमाणं सर्पराजिभवनमध्यगमार्गः ।
ज्ञायते च निखिलं ग्रहचक्रं नो मनस्तु चपलं गणिकायाः ॥ ६१० ॥

या शुनीव बहुचाटुशतानि दानतो वितनुते मलभक्षा ।
पापकर्मजनिता कपटेष्टा यान्ति पण्यवनितां न शुभास्ताम् ॥ ६११ ॥

मद्यमांसमलदिग्धमशौचं नीचलोकमुखचुम्बनदुष्टम् ।
यो हि चुम्बति मुखं गणिकाया नास्ति तस्य सदृशोऽतिनिकृष्टः ॥ ६१२

या न विश्वसिति जातु नरस्य प्रत्ययं तु कुरुते निकृतज्ञा ।
नोपकारमपि वेत्ति कृतघ्नी दुःखदस्त्यजत तां खलु वेश्याम् ॥ ६१३ ॥

रागमीक्षयुते तनुकम्पं शुद्धिसत्त्वधनवीर्यविनाशम् ।
या करोति कृपाला विविधेन तां स्पृशन्ति गणिकां मदिरेव ॥ ६१४ ॥

योपतापनपराभिश्रितैव चित्तमोहनकरी मदिरेव ।
देहवारणपदस्थरिकेव तां भजन्ति कथमापणयोषाम् ॥ ६१५ ॥

सर्वसौख्यतपोधनचौरी सर्वदुःखनिपुणा जनमारी ।
मर्त्यमत्तकरिबन्धनवारी निर्मितात्र विधिना परनारी ॥ ६१६ ॥

शुभ्रवर्म सुरसपकपाटं यात्र मुक्तिसुखकाननवाटि ।
तत्र दोषचयतो गुणकामौ किं भजन्ति सुखमापणमार्गाम् ॥ ६१७ ॥

भक्तिमित्यमुपयाति मनुष्यो दासमस्मति कुलं विदधाति ।
धर्ममिन्द्रियमनेकमरूज्ञः सा न पण्यवनिता भजनीया ॥ ६१८ ॥

येन पश्यवनिता जगति स्यादुःखदाननिपुणा कथमेते ।
मर्मिनो जनन्दुःखमपारं प्राप्नुवन्ति गुरु सोढुमशक्यम् ॥ ६१९ ॥
दोषमेवमवगम्य मनुष्य शुद्धबोधजलधौतमनस्कः ।
स्त्यजत्यवति पण्यपुरंध्रीं जन्मसागरनिपातनदक्षाम् ॥ ६२० ॥

इति वेश्यासङ्गनिषधनिरूपणम् ॥ २४ ॥

ानि कानिचिदनर्थवीचिके जन्मसागरजले निमज्जताम् ।
न्ति तु समितस्थानि देहिनां तानि चाक्षरमयेन निश्चितम् ॥ ६२१ ॥
ावदत्र पुरुषा विवेकिनस्तावदेति हि जनेषु पूज्यताम् ।
ाद्दुरुत्तमगुणा भवन्ति च यावदक्षरमण न कुर्वते ॥ ६२२ ॥
स्मिद्धोपशममधर्मवर्जिता धर्मकर्मपवनतो बहिष्कृता ।
ुक्तदोषमतिना विचेतना क न दोषमुपचिन्वते जना ॥ ६२३ ॥
ृत्यमस्यति करोत्यसत्यतां दुर्मतिं नयति हन्ति सङ्गतिम् ।
र्ममपि वितनोति पातकं घूतमत्र कुरुतेऽथवा न किम् ॥ ६२४ ॥
ूक्ष्वोऽपि कुपितो विकम्पते विग्रहं भवति सत्वरो यत ।
मवते मरणमारणक्रिया तेन तच्छुभमतिर्न दीव्यति ॥ ६२५ ॥
ृर्धेवनरतस्य विद्यते देहिनो न करुणा विना तया ।
पापमेति परदुःखकारणं श्वभ्रवासमुपयाति तेन स ॥ ६२६ ॥
पैशुनं कटुकमश्रवासुखं वक्ति वाक्यमनृतं विनिन्दितम् ।
वचनाय कितवो विचेतनस्तेन तिर्यग्गतिमेति तेन स ॥ ६२७ ॥
अन्यदीयमविचिन्त्य पातकं निघृणो हरति जीवितोपमम् ।
द्रव्यमत्र कितवो विचेतनस्तेन गच्छति कदर्थतां चिरम् ॥ ६२८ ॥
शुभदुःसपदुष्कर्मकारिणीं कामिनीमपि परस्य दुःसहाम् ।
धूतदोषमलिनोऽभिलष्यति संसृताटवि तेन दुःखित ॥ ६२९ ॥
जीवनाशनमनेकधायुपञ्चन्ममवरमणोपतो नर ।
संकरोति बहुदुःखमम्भीस्त्यजयाति भवकाननं यत ॥ ६३० ॥
साधुबन्धुपितृमातृसज्जनान्मन्यते न तनुते मले कुले ।
धूतरोषितमना निरस्त्रपी शुभवासमुपयात्यसौ यत ॥ ६३१ ॥

द्यूतमाश्रितवतो गताशयो मातृमस्तमपि योऽपकर्षति ।
सीसद्युतिकुलनीतिदूषणं किं न कर्म कुरुते स मानवः ॥ ६३२ ॥
घ्राणकर्णकरपादकर्तनं यद्बलेन लभते शरीरवान् ।
तत्समस्तसुखधर्मनाशनं द्यूतमाश्रयति कः सचेतनः ॥ ६३३ ॥
धर्मकामधनसौख्यनाशिना वैरिणाशरमणेन देहिनाम् ।
सर्वदोषनिलयेन सर्वदा संपदा खलु सहाक्षमाहिषम् ॥ ६३४ ॥
यद्गृहादिविभवजन्मनाशनं शुद्धराटि कलहादि कुर्वते ।
तेन शुद्धधिषणा न तन्यते द्यूतमत्र मनसापि मानवाः ॥ ६३५ ॥
द्यूतनाशितसमस्तभूतिको बम्भ्रमीति सकलां भुवं नरः ।
जीर्णवस्त्रकृतदेहसंहतिर्मस्तकाहितमरः क्षुधातुरः ॥ ६३६ ॥
याचते नटति याति दीनतां लज्जते न कुरुते विडम्बनाम् ।
सेवते नमति याति दासतां द्यूतसेवनपरो नरोऽधमः ॥ ६३७ ॥
रुष्यतेऽन्यकितवैर्निषेध्यते बध्यते वचनमुच्यते कटु ।
मोघसेऽत्र परिभूयते नरो हन्यते च कितवो विभिद्यते ॥ ६३८ ॥
हन्ति ताडयति भाषते वचः कर्कशं रटति विग्रहं भ्यवान् ।
संतनोति विदधाति रोषणं द्यूततोऽत्र कुरुते न किं नरः ॥ ६३९ ॥
चिन्तितेन बहुधा किमत्र भो द्यूततो न परमस्ति दुःखदम् ।
चेतसेति परिचिन्त्य सज्जनाः कुर्वते न रतिमत्र सर्वथा ॥ ६४० ॥
श्रीकुलद्युतिगुणधर्मरक्षणं स्वर्गमोक्षसुखदानपेशलम् ।
कुर्वताक्षरमणं न तत्त्वतः सेव्यते सकलदोषकारणम् ॥ ६४१ ॥

इति द्यूतनिषेधनिरूपणम् ॥ २

वाञ्छत्यङ्गी समस्तं सुखमनवरतं कर्मविध्वंसतस्त-
च्चारित्रात्स्यात्प्रबोधात्प्रवति तदमलं सत्सुशास्त्रात्सतस्तत् ।
निर्दोषात्मा सदोषा जगति निगदिता द्वेषरागादतोऽत्र
ज्ञात्वा मुक्त्यै सदोषान्विकलितविपदे माश्रयन्त्वाशु सन्तः ॥ ६४२
जन्माकूपारमध्ये भृतिजननजरावर्तमत्यन्तभीमं
मानादुःखोग्रनक्रभ्रमणकलुषितं व्याधिसिन्धुप्रवाहम् ।

नीयन्ते यातिवर्गं पुरुदुरितभरं यैर्निरूप्यारसन्त-
स्ते रागद्वेषमोहा रिपव उरुबला येन धूताः स आप्तः ॥ ६४३ ॥
देहार्धे येन शम्भुर्गिरिपतितनयां नीतवान्यस्तधैर्यो
वक्षो लक्ष्मीं मुरद्विट् पयसिजनिलयोऽध्यर्धवक्त्रो बभूव ।
गीर्वाणानामधीशो दशशतभगतामस्तबुद्धिः प्रयातः
मध्यस्थो येन सोऽयं कुसुमशररिपुर्देवमाप्तं तमाहुः ॥ ६४४ ॥
पृथ्वीमुद्वर्तुमीशाः सलिलनिधिसलिलं पातुमद्रिं प्रवेष्टुं
ज्योतिश्चक्रं निरोद्धुं प्रचलितमनिलं येऽस्थिरं स्तम्भयन्तः ।
निर्जेतुं तेऽपि यानि प्रथितपृथुगुणाः शक्नुवन्ति स्म नेन्द्रा
योऽमूनीन्द्रियाणि त्रिजगति जितवानाप्तमाहुस्तमीशम् ॥६४५॥
वर्णोद्यत्सत्त्वयुक्ता सकलसलिलमानबोधयन्ती विबाधा
निर्वाम्भोऽभ्युप्तदोषा मनसि विदधती साम्यमानन्दधात्री ।
ध्रौव्योत्पादव्ययास्थं त्रिभुवनमखिलं भाष्यते यस्य वाणी
तं मोक्षाय प्रयान्तु स्थिरतरधिषणा देवमाप्तं मुनीन्द्राः ॥ ६४६ ॥
भावाभावस्वरूपं सकलमसकलं द्रव्यपर्यायतत्त्वं
भेदाभेदावलीढं त्रिभुवनभवनाभ्यन्तरे वर्तमानम् ।
लोकालोकावलोकी गतनिखिलमलं लोकते यस्य बोध-
स्तं देवं मुक्तिकामा भवभयभिदे भावयन्त्वाप्तमत्र ॥ ६४७ ॥
सावेमित्यं समस्तं परिणतिरहितं कर्तृकर्मस्वभावा-
त्संबन्धस्य दृश्येत ~ फलवतोर्नाप्यनित्ये समस्ते ।
पर्यायोऽप्येति येन प्रकटितमुभयं ध्वस्तदोषप्रपञ्चं
तस्यैवार्च्यं विमुक्त्यै भजतमनिराकृत्ता भक्तितो देवमाप्तम् ॥ ६४८ ॥
नो चेत्कर्ता न भोक्ता यदि भवति विभुर्नो वियोगेन दुःखी
स्यादेवैकः शरीरी प्रतितनु स तथान्यस्य दुःखेन दुःखी ।
साक्षिज्ञापेति जन्तुर्गतिनिखिलमलं योऽप्यपत्येऽक्षबोधं
तं पूज्याः पूजयन्तु प्रशमितविपदं देवमाप्तं विमुक्त्यै ॥ ६४९ ॥

१ भवा

द्यूतनाशितधनो गताशयो मातृवस्त्रमपि योऽपकर्षति ।
स्तेयवृत्तिकुलनीतिदूषणं किं न कर्म कुरुते स मानवः ॥ ६१२ ॥
घ्राणकर्णकरपादकर्तनं यद्वशेन लभते शरीरवान् ।
तत्समस्तसुखधर्मनाशनं द्यूतमाश्रयति कः सचेतनः ॥ ६१३ ॥
धर्मकामधनसौख्यनाशिना वैरिणाक्षरमयेन देहिनाम् ।
सर्वदोषनिलयेन सर्वदा संपदा खलु सहाश्रमाहितम् ॥ ६१४ ॥
यद्वशाहितयशन्मनाशनं युद्धराटि कलहादि कुर्वते ।
तेन शुद्धधिषणा न सन्यते द्यूतमत्र मनसापि मानवाः ॥ ६१५ ॥
द्यूतनाशितसमस्तभूतिको बम्भ्रमीति सकलां भुवं नरः ।
जीर्णवस्त्रकृतदेहसंहतिर्मस्तकाहितभरः क्षुधातुरः ॥ ६१६ ॥
याचते नटति याति दीनतां लज्जते न कुरुते विडम्बनाम् ।
सेवते नमति याति दासतां द्यूतसेवनपरो नरोऽधमः ॥ ६१७ ॥
रुध्यतेऽन्यकितवैर्निषेध्यते बध्यते वचनमुच्यते कटु ।
मोच्यतेऽत्र परिभूयते नरो हन्यते च कितवो विनिन्द्यते ॥ ६१८ ॥
हन्ति ताडयति भाषते वचः कर्कशं रटति विद्यते व्यथाम् ।
संतनोति विदधाति रोधनं द्यूततोऽत्र कुरुते न किं नरः ॥ ६१९ ॥
अस्थिरेण वपुषा किमत्र भो द्यूततो न परमस्ति दुःखदम् ।
चेतसेति परिचिन्त्य सज्जना कुर्वते न रतिमत्र सर्वदा ॥ ६२० ॥
शीलसत्यगुणधर्मरक्षणं स्वर्गमोक्षसुखदानपेशलम् ।
कुर्वतामरमणं न तत्त्वतः सेव्यते सकलदोषकारणम् ॥ ६२१ ॥

इति द्यूतनिषेधनिरूपणम् ॥ १

मान्मथस्पर्शी समस्तं सुखममवरतं कर्मविध्वंसतस्त
चारित्रात्सत्प्रयोगाद्भवति तदमलं सम्भुगागाधवत्त्व् ।
निर्दोषात्मा सदोषा जगति विगदिता द्वेषरागादयोऽत्र
ज्ञात्वा मुक्त्यै सदोषान्विकलितविषये नाशयन्त्वप्रमत्ताः ॥ ६४
यन्मात्सर्यपरमार्थं स्फुटिममनजरावर्तमत्यन्तभीमं
नामस्तु सोमनकभ्रमणफलवपितं व्याधिसिन्धुमपाकृतम् ।

नीयन्ते प्राणिवर्गा' पुरुदुरितमरं येर्निरूप्यारसन्त
　ते रागद्वेषमोहा रिपुवदसुलदा येन भूताः स भास' ॥ ६४३ ॥
वेहार्धे येन शम्भुर्गिरिपतितनयां नीतवान्व्यस्तधैर्यो
　वक्षो लक्ष्मीं मुरद्विद् पैयसिजनिलयोऽप्यार्यवक्त्रो बभूव ।
गीर्वाणानामधीशो दशशतभगतामस्तबुद्धि' प्रयात
　प्रध्वस्तो येन सोऽयं कुसुमशररिपुर्देवमाप्तं समाहु: ॥ ६४४ ॥
पृथ्वीमुद्धर्तुमीशा सलिलनिधिजलं पातुमद्रिं प्रवेष्टु
　ज्योतिश्चक्रं निरोद्धुं प्रचलितमनिलं येऽखिलं सस्वबन्तः ।
निर्जेतुं तेऽपि यानि प्रथितपृथुगुणा' शक्नुवन्ति स्म नेन्द्रा
　योऽत्रामूनीन्द्रियाणि त्रिजगति जितवानाप्तमाहुस्तमीशम् ॥६४५॥
धर्माधर्मसन्दर्भमुक्ता सकलसलिलजमान्तोषयन्ती विवाधा
　निर्वाणोऽप्युत्पन्नदोषा मनसि विदधती साम्यमानन्ददात्री ।
सौम्योत्पाद्व्ययस्थं त्रिभुवनमखिलं भाष्यते यस्य वाणी
　त मोक्षाय प्रयान्तु स्थिरतरधिषणा देवमाप्तं मुनीन्द्राः ॥ ६४६ ॥
भावाभावस्वरूपं सकलमसकलं द्रव्यपर्यायतत्त्वं
　भेदाभेदावलीढं त्रिभुवनभुवनाभ्यन्तरे वर्तमानम् ।
लोकालोकावलोकी गतमिलितमलं लोकते यस्य बोध-
　स्तं देवं मुक्तिकामा भवभवनभिदे भावयन्त्वाप्तमत्र ॥ ६४७ ॥
स्याद्वेतिनित्यं समस्तं परिणतिरहितं कर्तृकर्मस्फुरासा
　स्तं संज्ञकस्तत्र ह्रस्वेन ''फलवतोनाप्यमित्ये समस्ते ।
पर्यालोच्येति येन प्रकटितमुभय व्यस्तदोषप्रपञ्चं
　तत्सेवार्थं विमुक्त्यै जननमिगलिता भक्तितो देवमाप्तम् ॥ ६४८ ॥
नो चेतस्ता न मोक्षा यदि भवति विभुर्नो वियोगेन दु:खी
　स्यादेवेक शरीरी प्रतितनु स सदान्यस्य दुःखेन दु:खी ।
स्याद्विज्ञायेति जन्तुर्गतिमिलितमलं योऽप्यपरोऽद्वबोधं
　सं पूज्या पूजयन्तु प्रशमितविपदं देवमाप्तं विमुक्त्यै ॥ ६४० ॥

१ भद्रा.

या रागद्वेषमोहाञ्जनयति हरते पारुपारिभरत्न
भिन्ते मानोच्चशैलं मलिनयति कुलं कीर्तिवल्लीं लुनीते ।
तस्यां ये यान्ति नार्यामुपहतमनसा भक्तिमत्यन्तमूढा
देवाः कन्दर्पवश्या वदसि तनुमतां ते कथं मोक्षलक्ष्मीम् ॥ १५० ॥
पीनश्रोणीनितम्बस्तनजघनभराक्रान्तमन्दप्रयाणा-
स्वारम्भोद्रेकरम्या मदनशरहता कामिनीर्ये भजन्ते ।
स्थूलोपस्थस्थलीनां कुचकलशतटस्फालकेलीकलङ्कास्ते
देवाः सुप्तेऽजगत्यामिह वद विद कीदृशाः सन्त्यसन्त ॥ १५१ ॥
ये सगृह्णन्ति शत्रुरिपुरुधिरैः पिञ्जराण्यायुधेशा
चक्रेष्वासासिचक्रकचपरशुगदाशूलपाशादिकानि ।
रौद्रभ्रूभङ्गवक्त्राः सकलभयमुधो नीतिमुत्सारयन्ते
ते चेद्देवा भवन्ति प्रणिगदत बुधा लुब्धकाः के भवेयुः ॥ १५२ ॥
व्याघ्र्याभिर्व्यापकीर्णे विषमभुजगगणे क्रमकोपाविसर्पे
दुःखश्रेणीस्थाने भवगहनवने भ्राम्यते येन जीवः ।
ये तत्सीलप्रमादमिथमभिधा निन्दनीय भजन्ते
देवास्तेऽपि पूज्या निगदत सुधियो निन्दिताः के भवेयुः ॥ १५३ ॥
निद्राचिन्ताविषादश्रमभयजनमदस्वेदखेदप्रमाद
क्षुद्रागद्वेषतृष्णाश्वतिजननजराव्याधिशोकस्वरूपाः ।
यस्यैतेऽष्टादशापि त्रिभुवनभवनव्यापिनः सन्ति दोषा
स्ते देवं मासमाहुर्नयनिपुणधियो मुक्तिमार्गाभिधाने ॥ १५४ ॥
रक्तार्द्रभिन्नकृत्तिं नटति गणवृतो यः श्मशाने गृहीत्वा
निस्त्रिंशो मांसमत्ति त्रिभुवनभविनां तक्षिपेनाननेन ।
गौरीगङ्गासक्तो त्रिपुरवहनकृद्दैत्यविध्वंसदक्ष-
स्तं रुद्रं रौद्ररूपं कथमभयधियो नित्यमाप्तं भजन्ति ॥ १५५ ॥
स्मरस्या पद्मामभिज्ञां मदनशरहतो गोपनारी सिषेवे
निद्राविद्राणचित्तः कपटशतमयो दानवारातिपाती ।

रागद्वेषाभिभूतो युवतिसुरसमे सारथिर्योऽश्वमर्त्य
कुर्वाणं मेम नार्यां विटवदसिसमं नाशमाहुर्मुरारिम् ॥ ६५६ ॥
य कन्तुध्वस्तचित्तो विकलितचरणोऽप्यार्यवक्रत्वमाप
नानानाट्यमयोगत्रिदशपतिवधूतस्तीव्याकुलाक्ष ।
कुदग्निच्छेद्य संमूर्धितत्ववचनतः पद्मयं यस्य वक्त्र
स प्रमाणोति पीनः प्रणिगदत कथ कथ्यते तत्त्वबोधे ॥ ६५७ ॥
यो मान्योदेसि हत्या मतिविलिनमसुरैर्विग्रहे व्याधिविद्धो
यो दुर्वारैर्व दीनो भयचकितमना ग्रसते राहुणा च ।
मूढो विश्वस्तबोधं कुसुमशरहतः सेवते कामिनीं य
सन्तस्तं भानुमार्तं भवगहनवनच्छित्तये नामयन्ति ॥ ६५८ ॥
मूढ कन्दर्पतप्तो वनचरयुवतो भगवत् पदास्य
यत्प्रार्थासक्तचित्तत्रिदशपतिरमुद्रोतमेनाभिशप्त ।
बहिर्निक्षेपमक्षी विगतकृपमना छात्वी मयहेतोर्
नैकोऽप्येवेषु देवो विगलितकलिलो दृश्यते तत्र रूपम् ॥ ६५९ ॥
रागान्धा पीनयोनिस्तनजघनभराक्रान्तनारीप्रसक्ता-
स्त्कोपाद्रातिघाताः प्रहरणभरणद्वेषिणो भीतिमन्तः ।
आत्मीयानेकदोषाख्यबलितविराड्वेहतो दुःखितश्च
ये देवास्ते कथं व शमयमनियमान्यानुमीक्षा विमुक्त्यै ॥ ६६० ॥
भर्योक्तोऽप्येवमत्र स्थिरपरमभियतास्वतो देवभाव
संसज्जैसान्कुदेवांश्चिविषयसमूतो दीर्घससारहेतून् ।
विध्वस्ताशेषदोषं जिनपतिमखिलं प्राणिनामापदं त
ये वन्दन्तेऽनवर्य मदभमवनुत ते लभन्ते सुखानि ॥ ६६१ ॥
इदं मर्मेन्द्रमन्दरमुकुटतटीकोटिविश्लिष्टपुण्य-
स्त्राम्यत्पृक्तोपचारैर्जिनपतिनुतये व्याहरान्मैर्जिनस ।
यावद्वैव ममूर्त प्रसभभवमयार्जक्षिमधयाताचिते
नैराशोर्क्ष विमुक्त्यै पदमपदमथ व्यापदामाश्रमाश्रम् ॥ ६६२ ॥

नैषां दोषा मयोक्ता वचनपटुतया द्वेषतो रागतो वा
किं त्वेषोऽत्र प्रयासो मम सकलमिदं ज्ञातुमाप्तं विवेकम् ।
दक्षो दोषो न चात्र त्रिभुवनहितकृद्विद्यमाने परत्र
भानुर्नद्दिति भासितसिकमपि तमो नावभूतं हि तावत् ॥ ६६३ ॥

आप्तविवेचनम् ॥ २१ ॥

जिनेश्वरक्रमयुगभक्तिभाविता विलोकितत्रिभुवनतत्त्वविस्तराः ।
महाव्रतान् यदिह गुणांश्चरन्ति ये नमामि तान्भवरिपुभित्तये गुरून् ॥ ६६४ ॥
समुद्यतास्तपसि जिनेश्वरोदिते वितन्वते निखिलहितानि निःस्पृहाः ।
सदा न ये भवनमदैरपाकृता सुदुर्लभा जगति मुनीश्विनोऽत्र ते ॥ ६६५ ॥
तपांसि ये स्थिरसुखदानि तन्वते भवक्षये सपरपरिग्रहग्रहम् ।
विवर्जिताः सकलममत्वदूषणै नमामि तानमलपदाप्तये यतीन् ॥ ६६६ ॥
न यान्त्यवश्यमसुखमिति भावतो विरुन्धते तमिह गुणं शरीरिणाम् ।
विभिन्दतो भवभयभूरिभूभृतो मुनीश्वरा विदधति मे कृपालवः ॥ ६६७ ॥
शरीरिणं कुसुमगुणमार्गणार्दितो विमुक्तये विदधति निर्मलं जवात् ।
निमीलिता जनमदुरन्तदुःखतो नमामि ताञ्जनकसमान्गुरून्सदा ॥ ६६८ ॥
वदन्ति ये वचनमनिन्दितं बुधैरपीडकं सकलशरीरधारिणाम् ।
मनोहरं रहितकषायदूषणं भवन्तु ते मम गुरवो विमुक्तये ॥ ६६९ ॥
न सन्ति च स्थितपथितास्त्रिकं वने पुराकरक्षितिधरकाननादिषु ।
त्रिधा तृणमणिसमबुद्धयस्तमो नमामि तं जननविनाशिनं गुरुम् ॥ ६७० ॥
त्रिधा स्थिरं सुखमनसीशतासमा विलोक्यते कमनविलोकनादित ।
पराङ्मुखाः शमितकषायदुर्जयो नमामि तान्विषयविनाशिनो गुरून् ॥ ६७१ ॥
परिग्रहं द्विविधमपि त्रिधापि ये न गृह्णते न तनुमता विवर्जिता ।
विनिर्मलस्थिरशिवसौख्यकाङ्क्षिणो भवन्तु ते मम गुरवो भवच्छिदः ॥ ६७२ ॥
निजन्तुके दिनकररश्मिभासिते भ्रमन्ति ये पथि दिवसे युगेक्षणाः ।
स्वधर्मतः सकलशरीरधारिणां दयालवो वदति नमामि तेऽङ्गिनाम् ६७३
दिगम्बरा मधुरमपैशुनं वचः श्रुतोदितं अपरहितावहं मितम् ।
ब्रुवन्ति ये गृहिजनजल्पनोज्झितं यथार्थिनः शरणमितोऽस्मि तान्गुरून् ६७४

